* ओ३म् *

# हरिद्वार-गुरुकुले

षष्ठे

# सरस्वती सम्मेलने

सभापतेः

# अभिभाषणम्

सभापतिश्च

श्री प्रो० सत्येन्द्रनाथ सेनः एम० ए०

विद्यावागीशः




गुरुकुलीय साहित्यपरिषदा

प्रकाशितम्

सं० १९७०



ओ३म्

शँ नो मित्रः शं वरुणः शँ नो भवत्वर्य्यमा ।
शँ न इन्द्रो बृहस्पतिः शँ नो विष्णुरुरुक्रमः ॥

भोः श्रीमन्तः आर्य्यमिश्राः, नमो भवद्भ्यः ।

अहमद्य आत्मानं बहु मन्ये यदहं भवद्भिरद्य एतस्या महत्याः सभायाः साभापत्ये विनिवेशितः । सभापतित्वं नाम गौरवायैव, विशेषतश्चात्र । वाचस्पतिनापि स्पर्द्धमानेषु विद्याज्ञानवयोवृद्धत्वात् सर्वथा गुरुस्थानीयेषु भवादृशेषु कोविदेषु उपसन्नेषु साभापत्यं कस्य नाम गौरवं नावहति; किन्तु दोषा वाच्या गुरोरपि इति मया भवतां निर्वाचनदोषस्तु वक्तव्य एव । को नाम भवतां विचारः यदनेन अर्वाचीनेन दुर्बलेन असारेण च दुर्वहमिमं भारं वाहयितुमुत्सहन्ते भवन्तः । का नाम भवतां स्पर्द्धा यत्पङ्गुं गिरिं लङ्घयितुमुत्साह्य विधातुरपि कर्माण्यनुकर्त्तुमिष्यन्ते भवद्भिः । किं वा वः सामाजिका वक्ष्यन्ति यद्व वाग्देव्या अन्तरङ्गेषु विद्यमानेषु पृथग्जनः कश्चिदस्य सम्मेलनस्य साभापत्ये स्थाप्यते । तथा च अगण्येषु अभिरूपेषु उपस्थितेषु विवर्णः कश्चित् साभापत्ये प्रेष्यते । आस्तां तावत् प्रणयोऽयं

भवतां यः खलु अन्धलीलया चरति। अतो भवतामनुष्ठानस्य समीचीनतां तदन्यत्वं वा अनालोच्यैव मया अवनितल-लोलेन शिरसा अतिकृतज्ञेन हृदयेन भणयोऽसौ भवतां ससम्मानमङ्गीक्रियते । आत्मन्यप्रत्ययतया तु कथञ्चिद्भीत-भीतः सन् स्वकर्मणि प्रसरामि । यद्यपि साहसमेतन्मदीयं यदस्यां परिषदि प्रधानासनेऽधिष्ठानं, तथापि भवतां गुण-गृह्यतामेवावलम्ब्य यथाशक्ति स्वकर्त्तव्यानि साधयितुं कथञ्चिदप्युत्सहे । आशासे यद्दोषाणां बाहुल्येऽपि यदि मम गुणः कश्चिदुपलभ्यते तर्हि स एव तावद् भवद्भिर्गृह्यता-मिति । नात्र ममैवाग्रहः, किन्तु भवतामपि तथैव स्यात् । न खलु उन्मत्तोऽपि स्वचेलस्य छिद्रमुद्घाटयति, किम्पुन र्भवादृशाः कोविदाः ।

मान्याः सभासदः ! कथाप्रारम्भे खलादीनां सतांच गुणकीर्त्तनं प्रसिद्धमेव । विषयाणां गुरुत्वादत्राप्यसौ समु-दाचारो मयाऽनुस्रियते । नररूपेण तिष्ठन्त्या महत्या देवतायाः प्रतिनिधेः प्रजारञ्जकस्य सुगृहीतनाम्नः श्रीसंध-युक्तस्य लार्डहार्डिञ्जमहोदयस्य जीवनमुद्दिश्य अनुल्लेखनीयं किमप्यतिमलिनं कर्म अनुष्ठातुं शक्यते इत्येतत् स्वप्ने-ऽप्यस्माकमगोचरमेवासीत् । न जाने अदूरदर्शिना भारत-

द्रोहिणा केन नरपिशाचेन इदमत्याहितमाचरितम् । वेदविदां जनानामभिशापभागसौ आत्मनः कर्मणः फलमनुभवतु । दिष्ट्या अशेषप्रजावर्गैः प्रहृष्टाशीराशिरसौ राजप्रतिनिधिः परमकारुणिकस्य धर्माधिकारिणः श्रीभगवतः प्रसादात् विपन्मुक्तः स्वकर्मणि पुनरवधानदानक्षमश्च संवृत्तः । जगदीश्वरस्य चरणेषु सकृतज्ञं प्रणताः केवलमिदमेव प्रार्थयामहे, यदसौ महाभागः स्वस्थदेहेन स्वीयकर्त्तव्यान्यनुतिष्ठन् अस्माकं श्रेयसे प्रयततामिति ।

संस्कृतशिक्षाया मन्दीभावदुर्दिनेपि ईदृशं सम्मेलनं भवतीत्यतिमात्रमस्माकं मुदं जनयति । मन्ये समग्रे भारते वर्षे संस्कृतविषयकं सुमहत्सम्मेलनमिदमेकमेव । अहो यत्र खलु एकदा ऋचां साम्नां यजुषाञ्च समुदीरणेन दिशः सर्वा मुखरिता इवआसन्, शुकै"र्निगृह्यमाणा वटवः पदे २ यजूंषि सामानिच यस्य शंकिताः"इत्यल कल्पनाया आभोगस्य यथेच्छं न्यूनीकरणेऽपि संस्कृतशिक्षायाः किमपि वैलक्षण्यं स्फुटमेव प्रतीयते, दुर्दैवमिदमस्माकं यत् तत्र संस्कृतोच्चारणमपि विरलमुपगतम् । संस्कृतशिक्षाया अभावात् स्वधर्म्मादपिजना श्च्यवन्ते । परधर्म्मान् समाश्रित्य

वेशभूषाहारालपनादिषु विजातीयभावमेव ते अनुवर्तन्ते; स्वजातीयेष्वपि जनेषु क्रमशः अप्रीतिमनुभवन्ति इति इत्थं देशस्य च अभ्युदयात् सर्वथा पराङ्मुखा वर्त्तन्ते। एवं गते काऽस्माकमाशा अभ्युदयस्य।

दिष्ट्या योग्यकाले एव केषाञ्चिन्महात्मनां सूक्ष्मदृष्टिरस्मिन् विषये निपतिता। जयत्यसौ कर्मवीरः वदतां वरश्च मालवीयोपनामा पण्डितः श्रीमान् मदनमोहनः; आर्य्य धर्म्मैकनिष्ठो विद्योत्साही वदान्यो द्वारवङ्गाधिराजो द्वितीय इव रामचन्द्रः श्रीमद्रामेश्वरः; देशधर्म्मजातीनां पृथक्त्वेऽपि भारतीयानां शिवानुध्यानैकतत्परा अक्लान्तकर्मा च श्रीमती एनिवेसण्टाभिधाना; ये खलु हिन्दुविश्वविद्यालयस्य प्रतिष्ठाकर्मणि अगणिततनूपातमनारतमध्यवस्यन्ति। आरिप्सितस्य तस्य साफल्यं श्रीभगवतः सकाशात् भूयोभूयः प्रार्थ्यते। स्यादेतत्, ईदृशानामभावे गुरुकुलमिदं भवताम् आर्य्यधर्म्मावलम्बिनां महदेकमालम्बनम्। जयत्यसौ पुरुषसिंहः भारताभ्युदयाय बद्धपरिकरः श्रीमान् स्वामी दयानन्दः, यस्योदारचेतसः महतोद्यमेन आर्षाचार

मनुतिष्ठासूनां शिक्षार्थं कुलमिदमतिविस्तीर्णं विरचितम् । इदं खलु संकीर्णसरण्यामतिपीड़ितानामुन्मुक्तहृदयानां प्रवातवसतिदानेन सुमहदुपकरोति । यद्धि वाग्देव्याः क्रोड़भूतं नाना मार्गेषु विषमं पादसंचरणशीलानां नितरां खिन्नानां वर्द्धमानानां बालानां मातृक्रोड़मिव ज्ञानेषु वर्द्धमानै र्नितरां स्वादु सेव्यते । यस्य च गुरुरिति विशेषणं गुरुत्वस्य साक्षिभूतं तिष्ठति । यत्र च नित्यं वृद्धोपसेवनात् ब्रह्मचारिणाम् 'आयु–र्विद्या–यशो–बलमि'ति चत्वारि संप्रवर्धन्ते । विधातृसर्गस्य सारभूतस्य तस्य प्रवर्त्तयितुः साक्षात् क्रियाकलाप इव अवतीर्णस्य दीर्घदर्शिनः श्रीमद्दयानन्दस्य नामसंकीर्तनमपि अस्माकं गौरवाय । यादृशी स्वाधीनचिन्तासरणि स्तत्रभवता प्रवर्त्तिता सा खलु न सर्वत्रोपलभ्यते । ज्ञातमेतद्ध भवतां यत्स एव गड्डलिकाप्रवाहेन प्रवहतामुन्मार्गोपदेशेन समाजविध्वंसनपटूनां खड्गपाणिरजायत । "चन्दनं न वने वने" किन्तु अतीव विचित्रमेतत् यदस्ति मलयादन्यतोऽपि चन्दनस्योद्भवः । अश्रुतपूर्वमपि तथ्यमेतत् यत्पञ्चनदप्रदेशो दयानन्देनेव वङ्गदेशोऽपि केनापि नृसोमेनालङ्कृत आसीत् । इदमत्रापरं

वैचित्र्यं यत्स्वामिनो दयानन्दस्य समकालमेव श्रीमदाचार्य्यगङ्गाधरस्य प्रादुर्भावोऽभवत् । रघुनन्दन-कुल्लूकादीनां पण्डितशार्दूलानामपि यत्प्रमादो नातिविचित्रः तद्धि ऋषि-मानवयोः प्रभेदं विस्मृतवतां वङ्गदेशवासिनां नूतनमेव तेन आवितम् । यः सन्त्यज्याचार्य्यशंकरादिभिः कृतानि व्याससूत्रोपनिषद्भगवद्गीताव्याख्यानानि प्रमादकलुषितानीत्यनादृत्य अभिनवानि व्याख्यानानि विरचयन्नधुनापि कूपमण्डूकैः पण्डितमानिभिः सासूयमालोक्यते । आस्तां तावत्, सपक्ष-गौरवधिया स्वदेशवासिनः प्रकर्षवर्णनायामुपच्छन्दितोऽभूवम् । अथ प्रकृतमनुसरामि ।

स्वामिनो दयानन्दस्य कर्मस्रोतसा खलु पञ्चनदो विधौतः । तदेव स्रोतः पंचनदे संस्कृत-शास्त्रार्णवानां बहुलप्रवाहस्य निदानम् । देवभूमेर्हिमवतः पादेषु विभिन्नेषु प्रदेशेषु संस्कृतशिक्षाप्रचारार्थं यद्वहवो विद्यालयाः प्रतिष्ठापिताः, यच्च बहुषु स्थलेषु मठादीनि निर्माय प्राचीनरीतिस्मारकैरातिथेयै र्वानप्रस्थै

ऽधिष्ठीयते, तत्र दयानन्दप्रवर्त्तितशिक्षापद्धतिरेव मूलम्।

सन्ति खलु बहवो ये श्रीमद् दयानन्दस्य पद्धतीः समग्रं नानुसरन्ति। इदमपि श्रुतमस्माभि र्यद् भवतां सामाजिकेष्वपि सन्ति केचन ये श्रीमतो दयानन्दस्याऽपि मार्गस्य दोषमुद्घाटयन्ति। नैतद् विचित्रं यद् दयानन्दो ऽपि घृतक्रियते। अत्रापि श्रीदयानन्द एव हेतुः। स्वामी दयानन्दः तिष्ठतु न तिष्ठतु वा, जनविशेषे नास्माकमादरः; किन्तु तस्य कर्मण्येव। दयानन्दस्य अदर्शनेऽपि तेनैव प्रदर्शितया रीत्या सर्वमेव निष्पादयिष्यते। दयानन्दस्याविर्भावस्य तात्कालिकं फलं हि पंचनदे समाजप्रतिष्ठा। भावि फलं तु दयानन्दमपि पणीकृत्य भारतस्य समग्रस्य वा जगतः चक्षुषोन्मीलनम्।

ज्ञायते खलु भवद्भिर्यत् पूर्ववङ्गवासिनामुपकारार्थं राजकीयपुरुषैः ढाकानगर्य्यां "रेसिडेनशियल् यूनिवर्सिटी" इति नामधेयं गुरुकुलवासरूपं किमपि प्रवर्त्तयितुमतिमात्रमुत्साहितम्। तस्य तु किञ्चिद् वैशिष्ट्यात् न तत् सर्वेषां सम्मतम् अत्र तु न तद् वैशिष्ट्यं लक्ष्यते। अतः सर्वेषां पथ्योऽयं गुरुकुलवास इति ध्रुवमुत्पश्यामः।

भ्रातरः सामाजिकाः,! सर्वत्रैतदुच्यते यत् सनातनमतावलम्बिभिरस्माभिः सह भवतां महती विप्रतिपत्तिरस्ति । नैतदस्माभिः सम्यगुपलभ्यते । अस्माभिर्वेदस्य अपौरुषेयत्वमङ्गीक्रियते, भवद्भिरपि तथा । संस्काराः अपि भवद्भिः केचन अनुष्ठीयन्ते,अस्माभि रप्येवम् । अनुष्ठानानां रीतयः आचाराश्च भवतां किंचिद्द विभिन्नाः । किन्तु पदार्थेष्वेव सर्वेषां निर्बन्धो भवितु मर्हति न खलु बहिराचारेषु । किं च स्वामिना दयानन्देनाप्येतत्स्फुटमुक्तं यत्, "न कोपि कस्यापि आचार्य्यः किन्तु मार्गप्रदर्शकः एव" अतः सत्यमेव भवतामादर्शो भवतु इति । एवं स्थिते कुतो विप्रतिपत्तिः सम्भवति । सर्वे एव वयं सत्यस्योपासकाः । जनविशेषस्य मार्गः सर्वथा नानुस्त्रियते इति चेत्, भवतामपि तथा । पूर्वमेवोक्तं यत् स्वाधीनचिन्तादीक्षितेषु भवत्सु सन्ति केचित् यैर्दयानन्दादपि उच्चैस्तरः कश्चिदादर्शो मृग्यते । नैतदेतेनोक्तं भवति यद्दयानन्दस्वामिनं न वयं श्रद्दधीमहि । तस्य वेदव्याख्यानादिकं सायणभाष्यादिविरुद्धमतो हेयम्, अत्रापि का नाम युक्तिः ? किं सायणव्याख्यानमपि

सर्वत्रैव पूर्वाचार्य्या अनुवर्त्तन्ते? यः खलु शंकरः साक्षात् शंकरस्यावतार इति मन्यते किं सोऽपि खलु सर्वत्रैवानुसृतः ? किमसौ रामानुजादिभि र्न प्रत्याख्यातः ? तथा च तस्य व्याख्याने क्वापि क्वापि विप्रतिपत्तिः प्रत्यक्षं दृश्यते, एतदपि नापूर्वम्, अतो नासोढव्यम्। कर्मसु दोषो गुणो वाऽस्तु, कृतकर्मणामेव स सम्भवति। अकृतकर्मणां तु न कश्चिदुपप्लवः। अत्रापि सर्वथा एतत् स्मर्तव्यं,यत् सत्यमेव भवतामादर्शः। स्वामिकृता ग्रन्थाश्च दिग्दर्शनायैव कल्पन्ते, मार्गस्तु तावद् भवद्भिः स्वयमेव निश्चेतव्यः।

श्रीमतो दयानन्दस्य अपरः क्लैको महानपवादः आसीत् येनासौ स्थूलदर्शिभि र्बहुभी राजपुरुषैः साशंकमीक्ष्यते स्म। नातिचिरात् पूर्वमपि तस्य सम्प्रदायस्य इयमेव व्यवस्था आसीत्॥ दिष्ट्या युक्तप्रदेशाधीशेन सद्यः स्वयमेव कृतचरणपातेन प्रत्यक्षं परीक्षणेन अपवादशंकुरसमुत्खातः। अधुनापि कथंचिद् राजधानीयमानायां कलिकातानगर्य्या मवस्थानात् इयमपि प्रवृत्तिरस्माभिरधिगता

यत् श्रीमता सरजेम्समेस्टनमहोदयेन बलवदनुरुद्धाद्व गवर्णमेण्टात् किमप्यर्थसाहाय्यमचिरादेव लब्धारो भवन्तः इति। हृदयस्यान्तस्तलतः प्रवृष्टाशिषः अशेषसाधुवादभाजनस्य सहृदयस्य एवंविधोदारचेतसः आनुकूल्येन भवतामयं समाजो नितरामभ्युदीयते इत्याशास्महे वयम् । गुरुकुलदर्शनेन नितरां प्रीतस्य श्रीमतो मेस्टनमहोदस्य श्रीमुखादुच्चरितानां वाक्यानां माधुर्य्यदर्शनाच्चेषां सारोऽत्र संस्कृतेनानूद्यते । "अस्मिन् प्रदेशे समग्रे वा भारते वर्षे गुरुकुलमिति अभिनवानां स्पृहणीयानां च कार्य्योपक्रमाणामन्यतमम् । राजकीयलेखेषु अतिभयावहानां सुगुप्तानां विपदामास्पदत्वेन वर्णितस्यास्य सम्प्रदायस्य परीक्षणं परमस्माकमभीप्सितमासीत् । प्रकृष्टश्चात्र समाधानं स्वयमेवागत्य दर्शनम्, इति मया स्वयमेवात्रागतम् । विचित्रस्याभिनवस्य शक्तिसंचारिणश्चास्य दर्शनेन नितरां परितुष्टश्चास्मि संवृत्तः । अत्र खलु एकतः स्वकर्त्तव्येष्ववहिता आधुनिकविज्ञानसम्मतं पन्थानमाश्रित्य प्राचीनानामृषीणां पदाङ्कानुसारिणस्तापसा जीवनधारणसाधनमात्रवर्त्तनेनैव संतोषामृततृप्तहृदया आचार्य्याः, अन्यतश्च सारवन्तो विधेया

दृढभक्तयः आज्ञानुवर्त्तिनः कर्त्तव्यैकनिष्ठाः निसर्गत एव संतुष्टचित्ताश्च ब्रह्मचारिणो विराजन्ते । अन्यच्चैतदत्र परिलक्षणीयं, यदन्येषु विद्यालयेषु छात्राणां मध्ये बहव एव उपनेत्रवन्तो दृश्यन्ते, अत्र तु स्वल्पा एव तथा इति ।"

युक्तमुक्तमेतत् । गुरुकुलं हि रत्नानामाकरः । तेषामेकेनानेनाद्य "संस्कृतसाहित्यं–तत्समालोचकाश्च" इति विषयं प्रस्तुत्य कश्चित् प्रबन्धः भवद्भ्यः अधुनैव श्रावयिष्यते । विषयस्य रुचिरत्वं, वक्तुश्च बुद्धेतिपदलाञ्छनेनोह्यमानविद्याप्रकर्षवत्त्वं,सुकवित्वेन विदितचरत्वं च अनुचिन्त्य भवद्भिस्तत्र मनः समाधेयमिति विनीतमभियाच्यते । इति शम् ॥

ओ३म्

भद्राः! सामाजिकाः, ! श्रुतो भवद्भि र्ब्रह्मचारिणः श्रीमतो बुद्धदेवस्य प्रपाठः । वादविवादाश्च तत्र भवद्भिः कृताः । यच्च यत् मतमत्र भवद्भिः प्रकटितं तत्र सामान्यतो न भवितुमर्हति अस्यापि काचित् महती विप्रतिपत्तिः । यत्र तत्र कथमपि सा विद्यते साऽधस्तात् भवतां गोचरीक्रियते । यच्छ्रीमता प्रबन्धपाठकेनोक्तं भवद्भिश्चानुमोदितम् "प्राचां समालोचने समयनिर्णयस्य यावत् प्रयोजनं तत्परंपरया पूर्य्यते" इति तन्नातिरुचिरं नः प्रतिभाति । परम्परागतवाक्यानामव्याघाते नियमाभावात् ।

"धन्वन्तरिक्षपणकामरसिंहशंकु--
वेतालभट्टघटकर्परकालिदासाः ।
ख्यातो वराहमिहिरो नृपतेः सभायां
रत्नानि वै वररुचि र्नव विक्रमस्य" ॥ इति

श्लोकोक्ताः सर्वेपि समकालमेव प्रादुर्बभूवुः इत्यत्र बहवोऽधुना संशेरते । भोजप्रबन्धेऽपि कालिदास-दण्डि-भवभूतिप्रभृतीनामेकत्रैव सम्मिलितत्वेन वर्णितत्वात् तेषां समसामयिकत्वमाक्षिप्यते । न च तत् कस्यचित् सम्मतम् ।

यदप्युक्तं—शिशुपालबधस्य तृतीयसर्गात् प्रारभ्य द्वादशसर्गपर्य्यन्तमनर्थकम्—तत्तु किंचित् सत्यमपि न

समग्रं सहामहे, तत्र चतुर्थ-षष्ठ-नवमैकादशसु सर्गेषु वर्णितानां पर्वतत्वस्तोदयादीनां वर्णनस्य अत्यावश्यकत्वात् । तदपि पल्लवमिति चेत्, न हि तत् पल्लवितत्वं दोषाय, अलंकृतमसंक्षिप्तमिति नियमात् । महाकाव्ये हि ग्रन्थ-बाहुल्यभिया संक्षेपेण वस्तुवर्णनं नातिचमत्कारं पुष्णाति । तद्यथा—

"रामो दशरथाज्जातः
प्राप्तविद्यश्च कौशिकात् ।
मिथिलायां धनुर्भङ्क्त्वा ।
मैथिलीं परिणीतवान्" ॥ इति

यच्चोक्तं करुणरसपरिपाकदर्शनेन कालिदासः करिपोतसम्भोगवर्णनेन विप्रलम्भविच्छेदं कुर्वाणं भवभूतिमतिशेते तदप्यसमभ्य न रोचते । करिपोतसम्भोगवर्णनस्य-"अयं तावत्करिपोतः ईदृशो जातः, अतः कुशलवावप्येतावता कालेन ईदृशौ जातौ"वित्यर्थे पर्य्यवसानात् विप्रलम्भोऽनेन न हि विच्छिन्नः किन्त्वतिमात्रम्परिपुष्ट एव । सम्भोगश्लोकात् पूर्वम् "अहो ! कान्तानुवृत्तिचातुर्य्यमपि शिक्षितं वत्सेन" इति रामोक्त्या, श्लोकादुत्तरं "भअवदि तमसे,अयं दाव एरिसो जादो, दे उण ण आणामि कुसलवा एत्तिएण कालेन केरिसा विअ होन्ति"इति सीतोक्त्या च

अर्थोऽत्र परिस्फुट एव ।

परोक्षसीतास्पर्शजनितरामसम्मोहादिवर्णने भवभूति र्भासमनुकरोति इति एतावतैव भासो विशिष्यते इत्यपि समाधानं न खलु न्यायसिद्धमिति मन्यामहे । कालिदास-भवभूति-बाणभट्टादयः सर्वे एव प्रायेण रामायण-महाभारत-पुराणादिषु वर्णितान् विषयानुपजीव्य स्वकीयान् ग्रन्थान् व्यरचयन् । किन्तु तथापि नैषां लघुत्वमाशंकनीयम् । अर्वाचीनैः प्राचीनाः कथंचिदनुकर्त्तव्या एव । मिल्टन-शेक्सपियर-टेनिसन् प्रभृतीनां प्रतीच्यकविशार्दूलानामपि इयमेव रीतिः । क्षम्यते चैतत् सर्वैः सामाजिकैः । महाकवित्वमप्येतादृशं सर्वैरङ्गीक्रियते एव । तथा चः—

"कविरनुहरतिच्छाया—
प्रकविरर्थं पदंचौरः ।
सकलपदावलिहर्त्रे—
नमस्तस्मै साहसकर्त्रे" इति ॥

किंच अनुकारका अपि आदर्शानतिशेरते इति नास्त्यपूर्वम् । शिवपुराणमुपजीव्य कालिदासेन कुमारसम्भवं विरचितमिति ऊह्यते । किन्तु को नु खलु न वेद शिवपुराणात्

कुमारसम्भवस्योत्कर्षम् ।

आस्तां तावत्, विमतयः खलु एतादृशे विषये भवितुमर्हन्त्येव। तथापि अद्य बह्व्यः खलु सूक्तयः श्राविताः वयमनेन बालप्रतिभेन बालेन।"बालादपि सुभाषितं ग्राह्यम्" "गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः"।अन्यश्च विशेषः श्रीमतो लक्ष्यते, यत् अनेन इयतैव वयसा संस्कृतभाषया अनर्गलं वचनशक्तिरधिगता। दीर्घं जीवतात् भवन् आयुष्मन्। पाण्डित्य प्रकर्षप्रभया दिशं विदिशञ्च उद्भास्य कल्पतां जगतो महोपकाराय इति।

माननीयाः पारिषद्याः! विचार्य्यविषयमधिकृत्य ममाप्यस्ति किंचित् वक्तव्यम्। तद् भवतामनुमोदनार्थमत्रोच्यते। संस्कृतसाहित्यं नाम जगति किमप्यनर्घं रत्नम्। भारतभूमौ कृतशरीरपरिग्रहा वयं तद् आत्मीयत्वेन परिग्रहीतुं शक्ता इति परमकारुणिकं भगवन्तं पुनः पुनः प्रणमामः। खेदस्त्वायं विषय आसीत् यत् कियन्तं कालं यावत् अस्य आलोचना विलुप्तेव जाता। परन्तु महानयमानन्दो यद-

धुना न केवलं भारते वर्षे अपि तु अतिदूरस्थितेषु जर्मणी-प्रभृतिदेशेष्वपि पण्डिताः इदमालोच्य महान्तमानन्दमनुभवन्ति। कोलब्रुक-विलसन्-मोनमूलरप्रभृतीनां विदुषां जीवनमस्यैव चर्चायां व्ययितम्। आसन् किल बहवः, सन्त्यधुनापि केचन पंडिताः,ये नान्येषु शास्त्रेषु कमप्यानन्दं लेभिरे,एतच्च ते मुक्तकण्ठं जगदुः।

काममेतत्स्वीकर्त्तव्यं यदेतत्संस्कृतसाहित्यं विलुप्तमिव जातम्। राजविप्लव एव तत्र कारणमासीत्। राष्ट्र-विप्लवेन सर्वमेव विप्लवते इति नियमेन साहित्यमपि विलुप्तम्। विलुप्तञ्च सत् अस्माकं पराधीनतया न तत् पुनरुज्जीवयितुं पारितम्। राज्ञां च विधर्म्मितया न तैरप्युपलालितम्। किन्तु "सत्यमेव जयते" "उत्कृष्टमेव सर्वाण्यतिशेते" इति संस्कृतसाहित्ये सर्वेषां चित्तमाकृष्टं बभूव। ये खलु वैदेशिकाः पंडिताः संस्कृतसाहित्येषु नातिसिस्निहुः तेऽपि क्रमश अस्य अनिर्वचनीयं रसमास्वाद्य इदं समुद्धर्तुं सर्वथा प्रायतन्त। तेषामेव यत्नानामभावात् मुषिता इव

वयमास्म। अधुना तेषामेव साहाय्यात् पुना रक्षुज्जो वयम्। एतच्च सुष्ठूक्तं "भूमेः स्खलितपादानां भूमिरेवावलम्बनम्" इति। आशातीतं साहाय्यं तेभ्यो लब्धमस्माभिः। अधुनाऽस्य सम्यग् रक्षणं परिपोषणं च अस्माकमेव प्रयत्नमायासं चापेक्षते। दिष्ट्या श्रीश्रीमता त्रिवाङ्कुराधिपतिना अत्र विषये मार्गो नः प्रदर्शितः। कालिदास-राजशेखर-बाणभट्टादिभिःससंभ्रमं कीर्तितस्य महाकवेर्भासस्य ग्रन्थानां प्रकाशविषये अत्यादरं दर्शयता तत्रभवता संस्कृतसाहित्यं समृद्धतरं कृतमित्यस्माभिः सानन्दमत्रोल्लेखनीयम्। सर्वथा कृतज्ञताभाजोऽस्य दृष्टान्तः अस्मद्देशीयैर्धनिकराजाधिराजादिभिरनुसर्तव्य इति निवेदयामः।

भद्राः सभासदः, किमत्र कारणं यत् संस्कृतसाहित्यं जगद्वासिनां सर्वेषां मनांसि रञ्जयितुमद्यापि समर्थम्? अस्य प्रकृष्टोत्कर्ष एवात्र कारणम्। प्रारम्भे तावद्दृश्यतां, संस्कृतभाषायाः वर्णक्रमो यथा शब्दविज्ञानमनुरुध्यते न तथाऽन्यस्याः कस्या अपि भाषायाः। अस्या अभ्यसनमेतावत्सुकरं यत् शिशवः

तेषामाचारानुगतात् विद्यारम्भात् प्रागेव तमायत्तीकुर्वन्ति। ह्रस्वाकारात् परं दीर्घाकारस्य, ककारात्परं खकारस्य, तत्परं गकारस्य, ततो घकारस्यागमनस्य ज्ञानं सकृदेव उपदेशापेक्षम्। कवर्गाभ्यासात्परं चवर्गादीनामभ्यासे शिशूनां वाक् स्वत एव प्रसरति। किन्तु नैतत् अपरस्यां कस्यांचित् भाषायां सम्भवति। को नामात्र न्यायः यद् अकारात्परं वकारस्यागमनम्। अन्यासां सर्वासामेव भाषाणामियमेवावस्था। एतत् तु अतीव चित्रं यद् विज्ञानमानिनः सुसभ्याः संस्कृतभाषायाः उत्पत्तेः कतिपयसहस्रवत्सरादर्वाग् जातासु स्वेषां भाषासु वर्णक्रमस्य हीनतां न्यूनतां बाहुल्यं चावलोक्यापि न तत्परिशोधयितुं प्रयतन्ते।

संस्कृतसाहित्यस्य खलु बहव एव विषयाः। "स्वनयित्नोरिवामन्द्रा यस्य वैखर्य्यादयो ध्वनयः;यास्कौर्णवाभकन्दस्वामि–स्थौलाष्ठीवि–शाकपूणि-सायणाचार्य्यप्रभृतिभि र्निरुक्तादियंत्रभ्रमिभ्रान्तोऽपि यो मार्तण्ड इव दुर्निरीक्ष्यः, यस्मिन्ननर्घे रत्ने प्रकाशिते विस्मयविस्फारितनेत्रं जगद्वति-

ष्ठते, अनादिनिधनस्य वेदस्य प्रथमत एव कीर्त्तनं रसा-यनमिव अस्माकं श्रेयसे । नास्ति कोऽप्येतादृशः पंडितः यः खलु अमुष्मिन् काले अमुकेन वेदो निरमायि इति वक्तुं शक्नुयात् । यद् योगदृष्टिसनाथैर्महर्षिभिरपि निर्धारयितुं न शेके, तत्कथं भ्रमप्रमादशीलैरस्माभिर्निर्णेतुं शक्यते । यस्य निर्मातारमनुपलभमानाः परमर्षयोऽप्युदघोषयन् "न कश्चिद् वेदकर्त्ताऽस्ति वेदस्मर्त्ता चतुर्मुखः" इति लाघ-वात् तस्य अनादित्वस्वीकरणमेव वरम् । किं तद्वस्तु यद् वेदेषु नोपलभ्यते । ये खलु द्रष्टारः सन्ति, ये खलु द्रष्टुं जानन्ति, ते तत्र सर्वमेव वस्तुजातं करामलकवत्पश्यन्ति । काव्यदर्शन-भूगोलेतिहासानामङ्कुराः तत्रैव विनिवेशिताः । तान्येव उप-जीव्य अस्माभिः पराक्रमितव्यम् । पराक्रम्य च बहवः एव सुगृहीतनामानः सुपाठ्यानि पुस्तकानि बहूनि विरचय्य अमरत्वपदमापुरन् ।

वेदादन्यत् सर्वं लौकिकपदवीमवरोहति । तत्रापि साहित्यं दर्शन मितिहास इत्यादयो विविधा भेदा दृश्यन्ते ।

गद्यपद्यभेदेन च साहित्यं द्विधा । ते द्वे अपि चर्चायाः परां कोटिमधिरुह्य अनेकधा भिन्ने । दर्शनशास्त्रमपि चर्चायाः परां काष्ठां प्रापत् । यान्येव तथ्यानि प्राचीनैः ऋषिभिरुक्तानि तान्येव जर्मणीप्रभृतिषु देशेषु अधुनाप्यालोच्यन्ते । तैः क्षुण्णान् मार्गाद् रेखामात्रमपि न केनापि व्यत्यगायि ।

अस्माकमितिहासस्तु देशान्तरवासिनामितिहासेन सह आकृत्या तुल्योऽपि किंचित् वैलक्षण्यं न्यूनतां चाभजत् । इतिहासानां मध्ये रामायणं, महाभारतं, हरिवंशं, विष्णुपुराणमित्यादीनां नामानि उल्लेखनीयानि । किन्तु तत् सर्वमेव पुरावृत्तमधिकृत्य विरचितम् । विदेशीयानामितिहासो यादृग् आधुनिकवृत्तसनाथः नास्माकं तादृशः । रुचिभेद एवात्र कारणं मन्यामहे । लौकिकं व्यावहारिकंचेतिवृत्तं नार्य्याः अत्यास्थया प्रेक्षन्ते स्म, तेषामध्यात्मचिन्ताप्रिचलनात् ।

"धर्मार्थकाममोक्षाणा—
मुपदेशसमन्वितम् ।
पूर्ववृत्तकथायुक्त—
मितिहासं विदुर्बुधाः" ॥

इतिलक्षणलक्षितानां भारतीयानामेव विरचने ते पुरुषार्थमपश्यन्, न खलु पृथ्वीराजादीनां लौकिकानां चरितरचने । अन्ये

ताहक् चरित्रख्यापने प्रयतन्ते, आर्य्याः कथं न प्रायतन्त ? इत्यनुयोगश्चेत् अत्र ब्रूमः–भिन्नरुचिर्हि लोकः इति।

माननीयाः सभासदः, आस्तां तावत् एतत् सर्वम्। संस्कृतसाहित्येषु प्रकृतेष्वेव प्रबन्धमिमं निबध्नीयाम। प्रथमतस्तावत् वेदाः। यान्येव तथ्यानि आविष्कृतानि सन्ति जनानां चिन्ताशीलतायाः प्रकृष्टोत्कर्षस्य निदर्शनानि उपस्थापयन्ति, तेषां भूयानेव भागो वेदेषूपलभ्यते। एतच्च सुष्ठु वक्तुं शक्यते "वेदोच्छिष्टं जगत् सर्वमिति"। तथा हि ज्योतिषशास्त्रोक्ता सौरगणना, चान्द्रगणना च, या च तज्जन्या मलमासगणना सर्वास्ता ऋग्वेदे दृश्यन्ते। यथा– "वेद मासो धृतव्रतो द्वादश प्रजावतः। वेदा य उपजायते"। अत्र सायणः–"यस्त्रयोदश अधिकमास उपजायते तमपिवेद" इति। "चन्द्रकिरणा" इति पदसंघमुद्दिश्य अपरिचितवेदाः आधुनिका विज्ञानविदः पंडिताः यद्भारतीयानां ज्योतिर्ज्ञानस्य अल्पतामुपहसन्ति, तस्योत्तराय आसतां तावद् अत्रोद्भवा वराहमिहिरप्रभृतयः, ऋग्वेदोऽपि अस्माकं गौरवायैव। यदपि रसायनस्य धातुद्रावणं तदपि ऋग्वेदे उपलभ्यते

यथा—"विजेहमानः परशु र्न जिह्वां, द्रवि र्न द्रावयति दारु धक्षत्" इति। विशुद्धप्रायमीदृशमनर्घं वेदमभिलक्ष्य पाश्चात्यसूरिभिः तूलमभिलक्ष्य धुनानैरिव अतिमात्रं पराक्रान्तम्। यास्कप्रभृतयो निरुक्तकाराः सायणप्रभृतयष्टीकाकृतश्च बहव एव समजनिषत। तैः वेदः आलोचितोऽपि नेदानींतनरीत्या समालोचितः। इदानीन्तनरीत्या वेदस्य समालोचनं खलु यावतीयजातीनां भाषाधर्म्माचारव्यवहारज्ञानमपेक्षते। तत्तु यास्कादीनां न सम्यग् आसीत्। अतस्तेषां समये वेदस्येदृशं समालोचनमसम्भावितम्, तस्मिन् परिश्रमश्च निरर्थक इव तैरमन्यत। रथ-वेबर-मोक्षमूलरप्रभृतयस्तु नानाशास्त्रविदः पण्डिताः वेदाविष्कारात्प्रभृति नवराज्यप्रविष्टा इव तत्त्वजिज्ञासवः अपोस्फूर्य्यन्त। किं बहुना, संस्कृतभाषायाः उपलम्भात् प्राक् "तुलनात्मकं शब्दविज्ञानं" इत्यस्य, वेदस्याविष्कारात् प्राक् "तुलनात्मकं पुराणशास्त्रं" इत्यस्य च प्रवृत्तिरपि नासीत्। अतो वेदस्य समालोचका बाहुल्येन पाश्चात्या एव समभवन्। अस्मद्देशीयानां मध्ये प्रत्नतत्त्वबुभुत्सूनाम् अग्रणीः सुगृहीतनामा श्रीमद्राजेन्द्रलालमित्रः, ज्वलत्प्रतिभः कर्मी श्रीमद्रमेशचन्द्रदत्तः, प्रामाणिकतमानां

भाण्डारे श्रीमद्भाण्डारकरः, शास्त्रनिष्ठोऽपि परिशीच्य-भाग्यः श्रीमद्बालगङ्गाधरतिलकः, अन्ये च केचन प्राधान्येन विराजन्ते । हा, हन्त ! गताऽस्मद्देशात् स्वाधीनचिन्ता यदस्माकं मध्ये ये खलु प्रतिभावन्तः तेऽपि टीकादीन्येव विरचय्य जीवनं सार्थकं मन्यन्ते । नूतनाः ग्रन्था न तैर्निर्मीयन्ते। पाश्चात्यविद्याविशारदै र्भारतवर्षिभिस्तु विद्यमानो ऽपि निजग्रन्थो नाद्रियते। तस्य प्रतिच्छायारूपश्च यः कश्चिद् विदेशीयभाषायां विरच्यते स एव तैः सदरं शिरोभिरुह्यते। को नु खल्वयं विचारो यत् कायं विहाय छायायां प्रणयः प्रदर्श्यते । अहो भाग्यं यदेतादृश्यामप्यवस्थायां कैश्चिदपि स्वाधीनचिन्तकै र्भारतभूमि रलंकृता। सत्यार्थप्रकाशकृत् कुशाग्रबुद्धिः श्रीमत्स्वामी दयानन्दः, भिषक्कुलविजयमुकुटमणिःसर्वतन्त्रस्वतन्त्रधीः श्रीमदाचार्य्यगङ्गाधरः, वृद्धत्वेऽपि शास्त्रशीलनश्रमेषु युवायमानो जरद्वैदिकः श्रीमदुमेशचन्द्रविद्यारत्नः इत्येषां नामान्यत्र ससंभ्रमं कीर्त्तनीयानि ।

लौकिकसाहित्यप्रस्तावे भगवतो वाल्मीके र्व्यासस्य च नाम्नी प्रागेव कीर्त्तनीये । वाल्मीकेः प्रभृति एव आम्नायादन्यो नूतनश्छन्दसामवतारोऽभवत् ।

रामायणं महाभारतं चोपजीव्य अर्वाचीनानां सर्वेषां रचना बाहुल्येन प्रावर्त्तत। किन्तु तयो रुभयोः, विशेषतश्चाद्यस्य सौन्दर्य्यं न तैः सम्यगनुकृतम्। अहो क्वान्यत्र तादृङ् माधुर्य्यम्, कुत्र वाऽसौ प्रसादः, क चासौ प्राञ्जलता। अस्य रचनायाः स्वाच्छन्द्यं परित्यज्य अर्वाचीनैः यत्कृत्रिमत्वमवलम्बितं तदस्माकं मनो नितरां पीडयति। स्यादेतत्, तथापि लौकिकसाहित्यं खलु कालिदास–भारवि–भवभूति--माघ--श्रीहर्ष--बाणभट्टप्रभृतीनां रचनाभिः समलंकृतम्। चिरातीतानां नृपाणां साधारणानां च जनानामितिहासबिम्बम्, एषामेव वाङ्मयमादर्शं प्राप्य अद्यापि दरीदृश्यते। अन्यच्च,---एषां खलु रचना सर्वथा लौकिकजनानामुपभोग्या। कस्य न चेतोरञ्जयत्यसौ भारत्या वरपुत्रस्य कालिदासस्य रचनामाधुरी। कस्य न मनो मोहयति महाकवेः श्रीहर्षस्य लोकातिगा रचनाचातुरी। माघ–भारव्यो र्नयकौशलं विलोक्य कस्य न चेतो नितरामनुरज्यते। वश्यवाचः कवेः भवभूते ग्रन्थगाम्भीर्य्यं कस्य चेतो नोत्कर्षयति। सत्स्वपि दोषकलापेषु दण्डि–बाणभट्टयोः वक्रोक्त्यादिभिः कस्य न मनो मोदते। कापयेषां रचना बाहुल्येन शृङ्गाररसैः

शासुता। किन्तु लोकयात्रामनुरुन्धानानां जनानां लोकव्यवहाराणां शिक्षणीयत्वात् एषामुपादेयत्वमक्षुण्णमेवेति मन्यामहे। बहुविधा भिन्नरुचयः खल्वधिकारिणः। सर्वमनोरमा गिरस्तु सुदुर्लभाः। अतः शृङ्गाररसाश्रिता अपि प्रबन्धा ब्रह्मचारिभिः कथंचित् वर्जनीया अपि गृहस्थानां नातिहेयाः। वस्तुतस्तु, काव्यस्य "कान्तासम्मिततयोपदेशयुजे" इत्येवमुपयोगाभ्युपगमात् गुरुसम्मितं वेदादिकं, सुहृत्सम्मितं च पुराणादिकं विहाय प्रवर्त्तमानैः किंचित्पतै रधिकारिभि रध्येतव्यत्वात् वैशिष्ट्यमिदं सोढव्यमेव। "सर्वमत्यन्तगर्हित"मिति नियमात् बाहुल्यञ्चास्य परित्याज्यमेव इत्यत्र तु नास्ति काचित् विप्रतिपत्तिः।

यदपि वितर्कः क्रियते, समासः समीचीनो नवेति, तत्र एकेनैव पदेन उत्तरं दातुं न शक्यते। कदाचिदसौ समीचीनः, कदाचित्तु न तथा। सर्वस्यैव पदार्थस्य किंचित् स्थानमस्ति। स्मर्त्तव्यमेतद्भवद्भि र्यत्, का कथा समासस्य, अश्लीलताया अपि कदाचित् (विटादीनां समाजे, वैराग्यस्य उद्बोधनाय च) गुणत्वमभ्युपगम्यत एव। यथा--मम्मटभट्टेनोदाहृतम् "उत्तानोच्छूनमंडूके" त्यादि।

संस्कृतसाहित्यत्रैलक्षण्येषु वक्ष्यमाणानि उल्लेखनीयानि ।

(क) निखिलं संस्कृतसाहित्यं सुनीत्या एव महिमानं प्रकटयितुं कल्पते । नैकाप्यत्र कृतिः कापि लक्ष्यते, या खलु कस्यांचित् लौकिकशिक्षायां न पर्य्यवस्यति । अपरेषां साहित्येषु नेयं रीतिः सर्वत्रैवावलम्ब्यते ।

(ख) इदं खलु द्वितीयं, यद् अत्र सर्वत्रैव ब्राह्मण्य-धर्म्मस्य माहात्म्यं प्रत्यक्षेण परोक्षेण वा कीर्त्यते । स्वभावत एव, देवानां मध्यवर्त्तनेन वा, ब्राह्मणस्यैव जयशब्दोऽत्र गीयते ।

(ग) तृतीयमेतत् यद्धि पाश्चात्यैः दोषबुद्ध्या किंचित् गर्ह्यते । तद्यथा—सर्वत्रैव कल्पनायामतिप्रकर्षकाष्ठा-प्रापणम् इति । यथा कादम्बर्य्यादिषु । चतसृषु दिक्षु सर्वदा प्राकृतिकदृश्यादीनामतिप्राचुर्य्यदर्शनमेवात्र निदानमिति मन्यामहे । एतत्तु वक्तव्यम् यत् स्त्रीणां वर्णनासु दोषो ऽयमल्पशो लक्ष्यते ।

(घ) तुरीयमत्यावश्यकमिदमुच्यते, संस्कृतभाषाया-मेका न्यूनता मया समनुभूता यदत्र विरामचिह्नानि न व्यवह्रियन्ते इति ।

मनोभावस्य सम्यक् प्रकाशसाधनी हि भाषा । मौखिक्यां भाषायां पूर्वापराणां शब्दानामुच्चारणकालस्य बहुत्वाल्पत्वाभ्यां विरामाः सूचयितुं शक्यन्ते । पौस्तकभाषायां तु न तथा । विरामचिह्नानां प्रवर्त्तनं भावप्रकाशविषये नितरामुपकरोति इति न केनापि कथंकारमप्यपलपितुं शक्यते । अतः पौस्तकभाषायां विरामचिन्हानि अस्माभिरवश्यं प्रवर्त्तनीयानि । यद्द यद्द एव उत्तमं तद्द तदेव ग्राह्यम् । हानोपादानयोरियमेव युक्तिः । न तत्र देश-काल-पात्रादीनामस्ति काचिद्द व्यवस्था । विरामचिन्हाऽभावोऽस्माकं पितृपैतामह इति चेदत्र ब्रूमः "तातस्य कूपोऽयमिति ब्रुवाणाः क्षारं जलं कापुरुषाः पिबन्ति" इति ।

अधुना समालोचकाः उच्यन्ते । समालोचनं खलु मूलग्रंथानपेक्षते । अतः प्रथमतः कियन्तं कालं यावत् ग्रंथकर्तृणामेव आविर्भावो भवति, ततः परं समालोचकानाम् । इह खलु संस्कृतसाहित्ये द्विविधमेव समालोचकप्रस्थानं

प्रसिद्धम् । तत्र एकं मुनिभिरुपदिष्टं, येनास्मद्देशीया टीकाकृतो निबन्धकाराश्च समचरन्त ; अन्यत् मोक्षमूलरादिभिरुद्भावितं विजातीयं, येन च पाश्चात्याः प्रसरन्ति । आलंकारिका अपि संस्कृतभाषायां समालोचकपदभाजो भवन्ति । ते हि अतीतकवीनां रचनासु विद्यमानान् दोषान् गुणांश्च समुद्भाव्य अलंकारांश्च तेषां सहृदयेभ्यः प्रदर्श्य रचनास्ताः समालोचयन्ति । अति निपुणत्वेऽपि तेषां ग्रन्थाः शृङ्गाररसकलुषितत्वादनादरणीयाः इति निरूपणं तु बालानां विलसितमिति तर्कयामः । किं न खलु आलोच्यन्ते स्वरूपतश्च परीक्ष्यन्ते सर्वाण्येवाङ्गानि नराणां नारीणां च शारीरतत्वं जिज्ञासुभिः पण्डितैरिति ? भवतु तावत्, एषां समालोचनं तु व्यष्टिरूपेणैव, न समष्टिरूपेण । इदमेव एषां वैशिष्ट्यम् । प्रतीच्यानां समालोचनं तु बाहुल्येन समष्टिरूपेणैव प्रवर्तते, न व्यष्टिरूपेण । अस्त्यन्यत्रापि एतयोः कोपि महान् विशेषः । प्राच्येषु समालोचकेषु न कोऽपि केषामपि कवीनाम् अभ्युदयकालं निर्णेतुं प्रायतत । प्रतीच्यास्तु—तिष्ठत्वन्यत् सर्वम्, अभ्युदयकाल एव तावदादौ निर्णीयतामिति साधु मन्यन्ते । लौकिकेतिहासानाम् अनुपादनीयत्वेन अध्य-

वसानात् प्राच्यैरीदृशमनुष्ठितम् । प्रतीच्यास्तु विज्ञानमितिहासश्च ज्ञानानां मूर्ध्नि वर्त्तत इति बुद्ध्वा तादृगेवानुवर्त्तन्ते । वस्तुतस्तु द्वावपि साधु प्रवृत्तौ । लौकिकचरित्रम्, इतिहासश्च इति द्वयं विज्ञातव्यम् सत्यम्, किन्त्वस्त्यन्यदपि किंचित् यस्मिन् आस्वादिते सहृदयाः परां निर्वृत्तिं लभन्ते । अतस्तदपि ज्ञातव्यमेव । अस्त्यन्यदपि कोऽप्यनयोर्मार्गयोः भेदः । प्राच्याः खलु व्याकरणं प्राधान्येन उपजीवन्ति । प्रतीच्यास्तु व्याकरणांशं परित्यज्य इतिहासमेवावलम्बन्ते । अत्रापि द्वयमेव मार्गणीयम् । सुषिक्तं, सुसिक्तं च इत्यत्र क्षेपः—स्तुति र्वा इति व्याकरणमन्तरेण निर्णेतुं न शक्यते । इतिहासस्यापि सर्वथा परित्यागे पुनरीदृश्येव, गतिः । कादम्बर्य्यां "सशेखरैः मौखरिभिः कृतार्चन" मिति, "अनेकगुप्तार्चितपादपङ्कजः" इत्यत्र च मौखरिवंशीयानां गुप्तवंशीयानाञ्च राज्ञां स्फुटमुल्लेखेऽपि न तमितिहासानभिज्ञा व्याकरणमात्रोपजीविनः पश्यन्ति । ये पुन रेतान् विभिन्नान् गुणान् एकीकृत्य संस्कृतसाहित्यमीक्षन्ते तेषामेव रीतिः सम्यगिति मन्यामहे । सा तु संस्कृतकाव्यज्ञानं पाश्चात्यमनुधावनं च इत्येतत् द्वयमेवापेक्षते । अस्मच्छात्राणां ज्ञानं तु अस्माकमेव सुकरं, न तु पाश्चात्यानाम् ।

अनुधावनं च कश्चित् शक्तिविशेषः, स तु नातिश्रमापेक्षः, अतः अस्माभिरेव रीतिरिय मवलम्बितुं क्षमा । चिन्तायाः स्वातन्त्र्यमन्तरेण तु न कुत्रापि किंचित् वैशिष्ट्य मवाप्यते । ये खलु नियमाः प्राक्तनास्त एव अनुसर्तव्याः नान्य इति मतिस्तु अज्ञानविजृम्भिता । तातस्य कूपोऽयमिति ब्रुवाणाः क्षारं जलं कापुरुषाः पिबन्ति इति सर्वदा मनसि निधाय अस्माभिः स्वादु पेय मेव सर्वथा मार्गणीयम् । इत्थं सति गुरुकुल वासिभ्यो बहु आशास्यते । ते खलु जानन्ति का नाम स्वाधीनचिन्तेति । श्रीमत्स्वामिदयानन्देन उन्मेषितं सर्वेषां चक्षुः । अतः श्रीमद्भिरेव अतितरां प्रयतितव्यम् । प्रयत्नाच्च श्रीमतां बहून्येव फलानि सामाजिकैरियतैव कालेनाधिगतानि । भवतां गुणानां दौरात्म्यात् अन्यान्यपि बहूनि अधिगुणेभ्यो भवद्भ्य एव याच्यन्ते ।

भारतीयानां मध्ये न केऽपि समालोचकाः प्रादुरभूवन् इति बहुभिरुच्यते खिद्यते च । तैस्तु अस्मद्देशीयानां टीकाकृतां समालोचकत्वं नाङ्गीक्रियते इत्युत्पश्यामः । मया तु दार्ढ्येन एतस्यान्यथा उच्यते । वेद—व्याकरण-दर्शन-स्मृति-काव्यादीनां सर्वेषामेवशास्त्राणां टीकासु कोऽपि कोऽपि ग्रन्थः ईदृशः उपलभ्यते यदाधुनिकाः समालोचका

अपि तत्रोक्तं समालोचनं दृष्ट्वा हृणीयन्त । तथा कानिचित् उदाहरणानि अत्र श्रीमद्भ्य उपस्थापयामि । प्रथमतः खलु वेदाः । वेदान् व्यस्य किल भगवान् बादरायणो वेदव्यास इति संज्ञां लेभे । वेदानां व्यसनमेव समालोचनस्य परा-काष्ठा इत्यस्माकं निर्धारणम् । ततोयास्कादीनां टीकाः वेदानां प्राचीनतमानि व्याख्यानानि । यास्कादीनां पूर्व-वर्त्तिनां टीकाकृतां केषाञ्चित् नामसु आसादितेष्वपि न तेषां टीका अस्माभिः समधिगताः । अतो यास्कस्य कृति-मारभ्य अस्माभिरुदाह्रियते । तद्यथा—नासत्ययो र्देवभिषजो र्नामनिर्वचन मृषिभि र्बहुधा कृतम् । कश्चिदाह—न असत्यौ नासत्याविति । अपरः कश्चित्—सत्यस्य प्रणेतारा विति । अन्यस्तु, नासाया जाताविति । एवं बहु विधानि निर्वचनानि दृष्ट्वा कौत्सनामधेयेन केनचिद् ऋषिणा इत्थमुच्यते "अति प्राचीनानां दुर्बोधविषमाणामेषां नाम्नां निर्वचनश्रमस्तु निष्फल एव" इति । अत्र यास्केन प्रत्युच्यते । 'प्रकृतार्थ-मबुद्ध्वा खिद्यते इति यत् बोद्धुरेव स दोषः, नार्थस्य । नैषः स्थाणोरपराधो यदेनमन्धो न पश्यति, पुरुषापराधः स भवति" इति ।

व्याकरणे ऽपि तावद्दृश्यताम् । प्राचीनानि चान्द्र-शाकटायनादीनि व्याकरणानि उपजीव्य भगवता पाणिनिना व्याकरणस्य सारभूतं निरमायि । तत्रापि यत् आधिक्यं न्यूनता वा दृश्यते तद्व वार्त्तिककारेणापसार्य्यते। यथा "—मन्यकर्मण्यनादरे विभाषाऽप्राणिषु" इति सूत्रे अप्राणिषु इति पदस्य अव्याप्तिमतिव्याप्तिं च निरीक्ष्य भगवता कात्यायनेनोक्तम्-"अप्राणिष्विति अपनीय नौ-काका-न्न-शुक-शृगालवर्जेषु इति वाच्य"मिति। इत्थमन्यत्रापि सूत्राणि सम्यक् पर्य्यालोच्य तेषां वैगुण्यमपसार्य्यते । वार्त्तिकस्य इयमेव संज्ञा, यथा-"उक्ता-नुक्त-दुरुक्तादि-चिन्ता यत्र प्रवर्त्तते । तं ग्रन्थं वार्त्तिकं विद्यात्—॥ इति "चिन्ता"नाम अत्र "समालोचन"मिति स्फुटम् । भाष्यकारेणापि "उपसर्गादनोत्पर" इति सूत्रे "अनोत्पर" इति अंशस्य अव्याप्त्यतिव्याप्तिवारणाय सूत्रं भङ्क्त्वा "उपसर्गाद्बहुलम्" इति सूत्रं चक्रे, एतदपि समालोचनमेव ।

दर्शनेऽपि तावत्—मीमांसादर्शनमादौ आलोच्यते । वेदस्यापौरुषेयत्वं भगवता जैमिनिना कीदृग् दार्ढ्येन

प्रपंचितं तद्भवद्भि र्ज्ञातमेव। यदपि पाश्चात्यैः "आन्तरं प्रमाणम्" इत्याख्यायते तत्रापि ऋषिणा सुरुचिरं विलसितम् । तथाहि काठकं—कौथुमं—तैत्तिरीयमित्यादिभ्यः वेदशाखानां नामभ्यः वेदानां तत्तत्कर्तृकत्वमाशंक्य सम्प्रदायप्रवर्तनात् सेयमाख्या उपपद्यते इति दर्शयितुं तेन उत्तरं सूत्रितम् "आख्याप्रवचनादि"ति ।

अर्वाग्भवैरपि दर्शनेषु कीदृश स्तर्कावष्टम्भः उपक्षिप्यते तत्पंडितानां सुविदितमेव। तेषा मेक एव अधस्तात् उद्धियते । न्यायदर्शनस्य आद्ये सूत्रे प्रमाणप्रमेयादीनां षोडशपदार्थानां संख्यानप्रस्तावे हेत्वाभासो ऽपि भगवता गौतमेन पठितः । तस्य हेयत्वमाशंक्य विश्वनाथेनोक्तम् । निग्रहस्थानान्तःपातिनां हेत्वाभासानां पृथक् अभिधानप्रयोजनन्तु जानाति भगवान् अक्षपाद एव। आप्तवाक्येषु प्रगाढमातिष्ठमानेनापि तेन पदविशेषस्य हेयता खलु भंग्या उपन्यस्ता ।

पुराणेष्वपि—भागवतेति ख्यातं पुराणमभिलक्ष्य आचार्य्यगङ्गाधरेण यद्य यदुक्तं तत् सर्वं समग्रं श्रीमद्भिरभ्युदस्थापितम् "पुराण ओ व्यासदेव" इत्याख्ये पुस्तके । अतो बाहुल्यभिया नात्र तदुद्धियते ।

काव्येऽपि—प्राधान्येन व्याकरणस्य वाच्यार्थस्य च

निरूपणशीलानां टीकाकृतां ग्रन्थेषु सन्ति कानिचित् स्थलानि यानीदानींतनानामपि समालोचनैः स्पर्द्धितुं शक्नुवन्ति। यथा– रघुवंशे त्रयोदशसर्गस्य "सौमित्रिणा तदनुसंससृजे स चैनमुत्थाप्य नम्रशिरसं भृशमालिलिङ्ग" इत्यादि श्लोकस्य व्याख्यानावसरे भरतलक्ष्मणयो र्वयोविचारमुपष्टभ्य मल्लिनाथेन विचारितम्—

"ननु रामायणे 'ततो लक्ष्मणमासाद्य वैदेहीं च परंतपः। अभिवाद्य ततः प्रीतो भरतो नाम चाब्रवीत् ॥' इति भरतस्य कानिष्ठ्यं प्रतीयते। किमर्थं ज्यैष्ठ्यमवलम्ब्य अनार्जवेन श्लोको व्याख्यातः? सत्यं,—किन्तुरामायणश्लोकार्थं टीकाकृतः श्रूयताम्। ततो लक्ष्मणमासाद्य इति श्लोके आसादनं लक्ष्मणवैदेह्योः, अभिवादनं तु वैदेह्या एव, अन्यथा पूर्वोक्तं भरतस्य ज्यैष्ठ्यं विरुद्ध्येत" इति।

इत्थं सर्वेष्वपि शास्त्रेषु समालोचना उपलभ्यन्ते। किंच, विचार इति पदं व्याकरण—स्मृति—दर्शनादीनां विचार एव रूढम्। विचारो नाम सम्यगालोचनम्। तदेव हि

समालोचनम् इति। यदि इदमपि समालोचनं न भवति, तर्हि किं तत् ? किमसौ शृङ्गवान् कश्चिदभिनवः पदार्थः।

प्रियाः सुहृदः, प्रबन्धस्यासारत्वात् दीर्घतायाः परं बिभेमि। तथापि केचन विषयाः मम मनसि उद्यन्ति तानननुक्त्वा न खलु प्रबन्धोऽयमुपसंहर्त्तुमिष्यते। यद्वत् एव मम दोषाः श्रीमद्भिः क्षान्ताः। अयमपरो दोषः यस्य मार्जनं विनीतं मया याच्यते। पुराणानामृषीणामनुकर्त्तुं भवन्तः सर्वथैव उत्सहन्ते। तत् सर्वदा तथैव स्थिरनिर्बन्धै र्भवद्भिर्वर्त्तितव्यम्। आधुनिकानामियं रीति र्यत् अन्तरन्यद्द बहिश्चान्यत्। तत्तु सर्वधा हातव्यम्। यतो नाऽयमृषीणां समुदाचारः। आर्जवं तावदाश्रियतां, कृत्रिमता च विहीयताम्। जीवनधारणव्यापारेषु लाघवमवलम्ब्यतां, चिन्तायाश्च गौरवमाधीयताम्। दिष्ट्या सर्वमेवतद्द भवत्सु लक्ष्यते। न किंचिदपि परिहीयते। तथापि---

विदिते चापि वक्तव्यं सुहृद्भि रनुरागतः।

माननीयाः सभासदः! वक्तव्यमस्माकं सामयिकमुपसंह्रियताम्। अवकाशोऽपि मे जातप्राय एव। महत्या अस्याः परिषदः प्राधान्यस्य नितरामयोग्योऽस्मि। किन्तु

तथाप्ययं भवतां मम च संतोषः यत् सभापतेः रासनं समलङ्कर्तु मादिष्टेन मया आसन मिदं समलं कृतम् । अथवा यदत्र मया कापि सिद्धिरासादिता सापि भवतां प्रसादा-देव । "सिद्ध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः संभावना-गुणमवेहि त्वमीश्वराणामि"ति । यादृशी सम्भावना मे भवद्भिः प्रदर्शिता सा खलु मनोरथानामप्यभूमिः तेन नितरां श्लाघितोऽहमान्तरिकीं कृतज्ञतां विज्ञापयामि । न खलु अवशिष्यते किञ्चदपि भवतामभ्युदयाय । तथापि केवलमिदमेव आशास्यते ।

वृत्तो मुख्यः सुनिहितवपुः श्रीदयानन्दधीरैः
सुक्षेत्रेऽस्मिन् दृढमनुगतैः पोषितः शिष्यसंघैः ।
पत्रैः पुष्पै रनुभवसुखो योऽधुना दानदक्षः
सोऽयं नित्यं वितरतु फलं भूयसे मंगलाय ।। इत्योम् ।।

---

॥ ओ३म् ॥

# गुरुकुलीय साहित्य परिषदः सकाशात्पूर्वं प्रकाशितानां ग्रन्थानां विज्ञापनम्

| | | मूल्यम् |
|---|---|---|
| ( १ ) | प्रथम वार्षिक वृत्तान्तम् | ≈) |
| ( २ ) | द्वितीय ,, ,, | ≡) |
| ( ३ ) | तृतीय ,, ,, | ।≈) |
| ( ४ ) | चतुर्थ ,, ,, | ॥) |
| ( ५ ) | मांसमीमांसा [ आर्य्यभाषा ] | ।) |
| ( ६ ) | वैदिक देवतास्वरूपम् ,, | ≡) |
| ( ७ ) | वैदिक रोगजन्तु शास्त्रम् ,, | -)॥ |
| ( ८ ) | संस्कृतसाहित्यं तत्समालोचकाश्च | यन्त्रस्थाः |
| ( ९ ) | वेदस्यानादित्वम् [ आर्य्यभाषा ] | ,, |
| ( १० ) | भारतीयशिक्षादर्श [ आर्य्यभाषा ] | ,, |

मन्त्री विश्वनाथ साहित्य परिषद्
गुरुकुल काङ्गड़ी, हरिद्वार

## साहित्य ग्रन्थमाला ।




श्री लालानन्दलाल-

प्रबन्धेन

काङ्गड़ी गुरुकुल-यन्त्रालये

मुद्रितम्




